८,१; मैं १,२,३५; काठ २९,५; क ४५, ६; –०पे ऋ १, १८७, [८-१०]; काठ ९, ८[२?a]; ४०, ८[३]†; पै ६,१६,८-१०.

†वातु(त-आ)प्य[b]– -प्यम् ऋ १, १२१,८; ९, ९३,५[c]; १०,२६, २; –प्याय[d] ऋ १०, १०५, १; कौ १,२२८; जै १,२४,८.

वाती-कार– प्रमृ. √वा द्र.

‡ ?वातीत्[e] पै १८,८,७.

?वातीवशी पै २०,५९,२.

वातोपजूत– प्रमृ., वात्य– √वा द्र.

वात्सप्र–, वात्सबन्धु– वत्स– द्र.

वाद– √वद् द्र.

वाधूर्य– वधुर– द्र.

वाधूय– √वधू द्र.

वाध्र्यश्व– *वध्रीय– द्र.

?वानयतु[f] पै २०, २३,५.

वानस्पत्य– √वन् द्र.

?वान्तस्य[g] पै ५,२०,२.

?वा न्य था उचो मा दयिष्णवः पै १,२९,३.

वापी[h]- >वापी-कूप-तडाग– -गानाम् खि ७, १, २; ४, १.

?वापीनाम्[i] शौ १९,२४,६.

वापुष – १वपुस्– द्र.

?वाप्यासि[j] शौ १९, ३८, २; पै १९, २४,३.

वाम् युष्मद्– द्र.

वाम,मा[k]– -मम्[l] ऋ १, ३३, ३; १२४,[१२; ६, ६४,६]; १४१, १२;१५०,५; ३, ६१,६; ४, ५, १३;३०, २४[२]; ५, ६०, ७; ६, १९,१०; ५३,२;७१,४; ६[३];७, २७,४; ७१, २;७८,१; ८,२७, २१; ८३, [(१८, २१)४]; ४[२]; १०, ७, ४; ४०, १०; ४२, ८; ५६, २; ६३,१६; १२२,१; १२४, ६; १८०, ३; खिसा ३, २; मा ४,५[m]; ८,५; ६[३]†; का ४, २, ३[m]; ८, २,१; ३,१[३]†; तै १, ४, २२, १[३]†; ¶५,१,१; २, ३[२]; ६, १२, ४†; २, २, १२, २[३]†; ३, २, ८, ४[२]; ३, ११, ५; ¶५, ३,८, १[२]; ५, ३, ३[४]; मै १,२, २[m]; ¶३,२, ६[३]; ३, २[४]; ८, ३; ४, १२, २[३]†; ६; १४, ६†; ¶काठ ८, १६†; २०, ६[२]; २१, ४[४]; २५, २; ६; ३९, १ऽ; ¶क ३१, ८[२]; १९[४]; क ३८, ५; ३९,३; शौ ४,२२, ४;६,९२,३; ७, ८९,२†; १४, १, ४६†; २,९; २०, ८९,८†; पै १, ७७,१; ३, ३१, ४; १५, २०, ३†[n]; १८, ५,३†;७,१०; १९, ३४, १३; –ममऽ-मम् ऋ ४, ३०, २४; १०, ७६, ८; –†मया ऋ ८, ९, ७; शौ २०, १४०, २; –मस्य ऋ १, १६४, १; ७; २, ३८, १०; ६,१३,२; १९, ५; ४८, २०; ७१, ६; ८, १, ३१;२७, ११; ८३,५; १०, १४०, ५; खि ५, ७, १, १; †मा ८,६; १२, ११०; †का ८, ३,१; १३, ७,९; तै १,४,२३, १†; २, २, १२, २†; ६,९,८; †मै २, ७,१४; ४,१०,१; १२, २; १३, २; ९ऽ[o]; १४, ६; काठ १५,१३; १६, १४†; २१, १३†; २५, ६¶; क २५, ५†; ३९, ३†; कौ २, ११७०†; शौ ४, २५, ६; †९, १४, १; ५; पै ३, २६,२[p]; ४,३४,४;†१६, ६६,१;७; –†मा ऋ १,४०,६; ६,१, ९; ७,१८,१; मै ४, १३,

१७१] K. पस. इतीव ?)।

a) पामे. पृ २८१९ *q* द्र.।

b) विप. (वृद्धतायुक्त- [सोम-, रयि-, महित्व-])। (√वृध् 'वृद्धौ' > कर्तरि) *वर्धुर्–+भव्य– (भाव-) >वस. *वर्ध्रुर्-भव्य– >यनि. (तु. नान्तरीयपूर्वं येन तात्पर्याऽभेदः द्र.; वैतु. SEY [१७२] मतान्तरसंग्रहः ?)।

c) 'हे सोम, पुनानः (पूयमानः [सन्])नः (अस्मान्) उप [क्रप्र.] नूत्नन्तं वाताप्यं विश्वश्चन्द्रं रयिं मास्व ('पवस्व)' इति वा.। ? मास्व > पवस्व इति शोधः द्र.।

d) विप.(इन्द्र-), यद्वा वर्धापनेऽर्थे भाप. द्र. (तु. पृ ६०७ *e*; वैतु. वें. सा. उदकार्थे नाप. इति [तु. या ६,२८]?)।

e) सपा. ऋ ३,३३,१३ शौ १४,२,१६ वः इति पामे.।

f) (मे >)म (आ√नी >) आनयतु इति द्वि-पदः शोधः।

g) वातस्य इति शोधः।

h) नाप. (कूप-भेद-)। वार्– (जल-)+(√भू 'प्रजने' >) *भ्री– >उस. *वार्-भ्री– >यनि.।

i) पामे. शोधश्च यक्र. पृ ६६२ *e*, १२४५ *e* द्र.।

j) वाऽप्यस्ति (= वा, अपि, अस्ति) इति शोधः।

k) विप. (प्रशस्य- [निघ ३,८]), नाप. (काम्य-वस्तु-)। <√वृप् '*प्रशंसाकामयोः' (वैतु. <√वन् इति या [४,२६;६.३१] प्रमृ., <√वा इति पाउ [१,१४०] ?)।

l) क्वचित् वा. क्रिवि.।

m) वामं प्रयति > सपा. तै १, २,१,२ सत्यधर्माणः इति पामे.।

n) सपा. ऋ २,३३,४ विभे.।

o) मैं. पश्च. वाम् अस्य इति ?।

p) सपा. वामस्य <> वामेन इति पामे.।

६; काठ १८, २०; पै १९, ३६, १$; –मानि ऋ ५, ८२, [६; ८, २२, १८; १०३, ५]; मै १, २, ७; ३, ८, २; काठ २, ८; क २, २; पै १२, ७, १३; –मे ऋ १०, २०, ८; –मेन ऋ १, ४८, १; शौ ७,६२,२[a]; पै १, ७१, ३१[b], १७, २८, ६.

१वामी[c]– -मी ऋ ६, ४८,२०; १०, ६९, १; मै १, ३,१[d], ४, ५, ४[d]; काठ ३, ९[d]; क २, १६[d]; –मीः ऋ ३, ५३, १; खि ५,७,४,८; काठ २३,११†; कौ १,३३८†; जै १,३५,७†.

†वाम-जा(त >)ता[e]– -ता ऋ १०, १४०, ३; मा १२, १०८; का १३, ७, ७; तै ४, २,७,३; मै २, ७, १४, काठ १६, १४; क २५,५; कौ २,११६९.

१वाम-देव[f]– -०व शौ १८,३,१६; ¶मै २,१,११, ३,२, ६; ¶काठ १०, ५[२]; ३२, २; शौ १८, ३, १५; –वस्य ऋ ४, १६, १८, ¶मै २, १,११; ३,२,६; ¶काठ १०, ५; २०,५, क ३१,७¶.

२वामदेव[g]– -वस्य काठ ५,२[h].

वामदेव-रथ[i]– -थस्य मै २, १, ११¶.

वामदेव्य[j]– -व्यम् मा १२, ४; का १३, १, ५; तै २, ६,७,२[२]; ३, ५, १०, ३[२]¶; ४, १, १०, ५; ६, ६, १०; २¶; मै १, ६, ७[२]¶; २, ७, ८; ३, ३, ५[२]¶; ४, २, २¶; ९,११; ¶काठ ६, ७; १६, ८$; २१,५[२]; २९,६[२]; ¶क ४, ६; ३१,२०[२]; ४५,७[२]; शौ ४, ३४, १; ८, ११,६,१०; १५, २, १०; ३, ५; ४, ५; ६; पै २, ४९, ३; ६, २२,१; १४, ३,१२; १६,१३३, १०; ११[k]; –व्यस्य तै २, ५, ८,१¶, काठ ३२, २[h]; शौ १५, २, १२; –व्याय शौ १५, २, ११; –व्ये मै १, ११, ५¶; काठ ७, १४; १४, ५¶; क ६, ३; –व्येन तै ३, ५, ३, २; मै ४, २, २[२]¶; काठ ३५, १५¶; शौ ८, ११, ८[k]; पै १७,२८,६?[l].

वाम-नीति[m]– -तिः ऋ ६,४७,७.

†वाम-भाज्– -भाजः ऋ ३, ५५, २२; ६,७१, ६; मा ८, ६; का ८, ३, १; तै १, ४, २२,१; २, २,१२,२; मै ४,१२,२.

¶वाम-भृत्[n]– -भृत् मै ३, २, ६; काठ २०, ६; क ३१,८; –भृतः तै ५, ५, ३, ३; मै ३, २, ६; –भृतम्,-भृता तै ५,५,३,२.

¶वामभृत्-त्व– -त्वम् तै ५,५, ३, ३; मै ३, २, ६.

वाम-मोष[o]– -षः तै ६,२,४,२.

वाम-सू[p]– -सुवाम्[q] पै २०, १८, १०?.

२वामी[r]– -मीः तै २,५, ६, २; ३; मै १,३,१.

वामन[s]– -नः मा २४,१; ७; का २६, १, ३; २, २; ¶तै १,८, १,१; ८,१; १७,१; २,१,५,२; ८,३; ५, ६, १४, १$; मै २, ६, १; ४¶; १३; ३, १३, २; ८; ४, ३, १[२]¶; काठ १५, १; ३¶; ४९, ४; –नम् मा ३०, १०; का ३४, २, २; ¶तै २, १, ३,

a) पाभे. वामस्य पै ३,२६,२ टि. द्र.।
b) पाठः? वामे नः इति शोधः। आ [कप्र.] वामे इति संबन्धश्च द्र. (तु. सस्थ. टि. रूप- > -पेण?)।
c) विप. (प्रशस्ता- [सूनृता- = स्तुति-])।
d) विप. (काम्या- [संदृश्-])। यनि. एपं सस्थ१। २वामी- इत्यत्रापि टि. द्र.।
e) विप. (इषु-)। बस. (तु. सा. Gri; वैतु. सा [का.] उ. म. GW. GRV. यनि. पुं. प्राति. इति [पृ १३२६ j अपि द्र.])।
f) व्यप. (ऋषि-)। बस.।
g) नाप. (साम-विशेष-)। तेनदृष्टमित्यर्थे अण् प्र.।
h) सपा. °देवस्य <> °देव्यस्य इति पाभे.।
i) षस. अन्तोदात्तः।
j) नाप. (साम-भेद-)। ड्यः प्र. (पा ४,२,९)।
k) सपा. °व्यम् <> °व्येन इति पाभे.।
l) °दे° इति पाठः? यनि. शोधः।
m) विप.। बस.।
n) नाप. (इष्टका-विशेष-)। उस.।
o) विप. (धनचौर- [वराह-])। उस. उप. <√मुष् 'स्तेये'। सपा. मै ३,८,३ आमुष- इति; काठ २५, २ क ३८,५ एमूष- इति, लुच १०४ : ११ वाम-मुष- इति च पाभे. (तु. पृ ६७७ i, १०६२ j)।
p) विप. (विपरीत-जननी- [लक्ष्मी-])।
q) शोधः पृ २०१४ g द्र.।
r) विप. (काम्यवस्तुमत्- [यजमान-])। मत्वर्थे ईः प्र. (पावा ५, २, १०९ [तु. तात्पर्ये सा.; वैतु. भा. यनि. = १वामी- इति कृत्वा अर्श विप. इति?])। पृ २०१ o,p यदुक्तं तन्नेष्टम्।
s) विप., नाप.। <√वम् इति अभा.।

१[२]; ५, २; ८, ३; ¶मै २, ५, ३[२]; ३, ७,९;८, ३; काठ १३, ३[२]¶; –नाः मा २४, ८; का २६, २,३; मै ३,१३,९; –नाय मा १६, ३०; का १७, ४, ४; तै ४, ५, ५, १; मै २, ९, ५; काठ १७,१४; क २७,४; –नेन काठ १३, ३¶.

?वामरता[a]- -०ते खि ४, ७[२], १०; पै ६, ४, १०.

?वाम् अहम् अवाव सृष्टा[b] पै १, ९५,४.

?वामौ पै १७, २९, २.

?वा यु:[c] ऋ १०, २९,१.

वायत[d]- -तस्य ऋ ७, ३३,२.

वायव्य- √वा द्र.

वायस(वप्रा.)- -सः[e] खि १,२,११; -सम् ऋ १,१६४, ५२[f]; खि १, २, ११[e]; २, ४, १[g]; काठ १९,१४†[f].

?वायसे पैं १६,२२,४.

वायु- √वा द्र.

वाय्य- वय्य- द्र.

१वार्[h]- वाः ऋ ४,५,८[i]; १०,९३, ३[j]; वारम् ऋ १,१३२,३[k].

२वार्[l]- वाः ऋ १, ११६, २२; २, ४, ६; ४, १९, ४; ८, ९१, १; ९८, ८; ९,११२, ४; १०,१२, ३; ९९,४; १०५, १[m]; १४५, ६; खि ५, २१, २; मा ५,११; का ५, ४, २; तै ५. ६, १, ३; मै २,१३, १[२]?[n]; ४, २, ५?[o]; काठ ३९, २; †कौ १, २२८; २, ६१; †जै १,२४,८; ३, ६, ७; शौ ३, १३, ३; १८, ६†; ४, ७, १?[p]; १०,४,३;४; १८, १,३२†; २०,१००,२†; १३५, १२; पै २, ३३, २; ३, ४, ३; ९,१-६; ४,१९,५; २६,१†; ५, ८, ८; १५, २३, ९; १६, १५, २-४; २०,४९-५०, ९; वार्भ्युः मा २२, २५; का २४,११,१.

१वार[q]- -रः ऋ १, ३२,१२; खि ५, १५, ५; काठ ३८, ३[r]; शौ १०, ४, २[२]; २०, १२९, १८;

---

[a]) विप. (*अङ्गार-रक्ता- ⌊लाक्षा-⌋)। पाठः? भाम-र(क्त>)क्ता- इति शोधः। अत्र विषये सिभा ⌊१,२१३⌋ उक्तपूर्वं नेष्टम्।

[b]) शोधः पृ २२२३ *k* द्र.। तत्र च तस्थे वाम् इतीष्टम्।

[c]) यनि. द्वे पदे (तु. पपा. GRV.; वैतु. या ⌊६,२८⌋ वें. सा. ORN. प्रभृ. वायुः ⌊प्र१<वि- =पक्षिन्-⌋ इतीव ?)। वाम् (अश्विभ्याम्?), युः इति शोधः। सस्थ. ?न्यधायि > (निर्√धा '*शब्दे' >) निरधायि इति शोधः। 'हे भुरणौ (अश्विनौ) ! यः (स्तोमः) वां (युवयोः) वने (*वन्दनाय) चाकन् (*चक्षणाय ⌊स्तवनाय⌋) न (संप्रति) निरधायि (उच्चारितोऽभूत्) (सः) शुचिः स्तोमः वां (युवभ्याम्) अजीगः (प्रस्थितोऽभूत्)' इति वा.। कयोरपि भिन्नयोर्ऋचोः पूर्वार्धोत्तरार्धौ व्यत्यस्तौ सन्ताविह समागतौ स्यातामिति संभाव्येत।

[d]) विप. (?स्तोतृ- ⌊पाशद्युम्न-⌋)। (√वृध् '*स्तुतौ' > कर्तरि) *वर्धत्- > यनि. (वैतु. सा. PW. प्रभृ. =वयत्-पुत्र- इति ⌊यत्र पूप. =२वयत्- इति PW. प्रभृ.⌋?)।

[e]) नाप. (?काक-)। [f]) विप. [*वृद्धिकर- (सरस्वद्- देव- ⌊=आदित्य-⌋) ]। (√वृध् > कर्तरि) *वर्धस्- > यनि. (तु. सा. ⌊अंशतः⌋; वैतु. PW. GW. GRV. प्रभृ. पक्षि-वाचकं नाप. < √वी 'गतौ' ⌊तु. पाउ ३, १२०⌋ इति ?)। पाभे. पृ १९०८ *k* द्र.।

[g]) नाप. (*वाहन-)। <√*वय् ⌊=√वह्⌋ 'वहने'।

[h]) विप. (रक्षक- ⌊क्षय- =निवास-⌋), नाप. न. (छादन-, रक्षोपकरण-)। <√वृ 'आवरणे'।

[i]) 'यत् (यदा) उस्रियाणां किरणानां वाः (आवरणम्) अपवन् (अपवारयामासुः)' इति वा. (तु. पृ १८०० *q*; वैतु. वें. सा. =उदक- इति, 'उस्रियाणां वाः इव' इति वा. कृत्वा GW. ORN. =प्रस्नव- इति, ?GRV. Gri. =⌊निरोधक-⌋ द्वार- इति, PW. °र- ⌊निधि-⌋ > -रम् इति शोधपरः इति)। [j]) 'देवानां वाः (शरणं) महः (महत् ⌊अस्ति⌋)' इति वा.। [k]) सस्थ. ?वारसि इत्येकं पदं यद्र.।

[l]) नाप. (जल- ⌊तु. निघ १, १२⌋)। (√वृष् 'वर्षणे =द्रवणे' >) *वृष्ट- > *वट्ट(ड्ड)- > यनि. (वैतु. माश ⌊६,१,१,९⌋ प्रभृ. <√वृ 'आच्छादने' इतीव ?)।

[m]) वैतु. सा. क्विप. <√वृ ⌊वरणे⌋ इति ?।

[n]) वाक् इति सकृत् शोधः (तु. पपा., सपा. तै ५, ६, १,४ काठ ३५,३ शौ ३,१३,६ च)।

[o]) ? वाक् इति शोधः (तु. आपश्रौ ४,१०,४ भाश्रौ ४,१५,३)। BC. अपि शोधार्हः।

[p]) वार्, इदम् इति पपा.? शोधः पृ २०२१ *r* द्र.।

[q]) नाप. (वप्रा. ⌊केश-, पुच्छ-, पवित्र-⌋)। केशार्थे <√वृ 'आच्छादने', पुच्छार्थे <√वृ 'वारणे' (तु. या १,२०), पवित्रार्थे <√वृ 'शुद्धौ' (वैतु. अन्ये वार(ल) मयत्वात् तथोच्यत इति ?। [r]) सपा. मा १९, ८८ प्रभृ. तैब्रा २, ६, ४, ४ वालः इति पाभे.।

पै १३, ६,१२†; १६, १५,२[?]; -†रम् ऋ ९, १३,६; १६, [८; २८,१; (६४,२५)७४,९,१०६, १०]; ३७, ३; ३८, ५; ६०,२; ६१, १७, ६७,२०; ६९, २; ४; ८३, १; ८५, [५; ९७, ५६]; ८६,२६; ३१;९७,४; १००,४; १०९,१६;कौ १,५३४‡[a];५३५, ५६२; ५७२; २, २४०; २९०; ५१०; ५४१; ६२७; ६३०; ६४४; ६६६; ७३१; ७२२; जै १, ५५, २‡[a]; ३; ५७-५८, ७; ३, २१, ५; २४, ६; ४०, ६; ४२, ८; ५१, ८; ५२, ९, ५३, २; ५५, ७; ५८, ३; ५९, १३; १४; -†राणि ऋ ९,६७, [(६२, ८)४; १०७, (३)१०], ८८, ६; ९६, २१; १०३, [२ (१०७,२२)]; कौ[b] १,५१३; २, ३३०‡; १०३९; जै १,५२, ३; ३, २७, ६‡[b]; -रान् ऋ २,४, ४,९,६०,३,९७,३१[a]; -†रे ऋ ९,७,[६;५०,३,५२,२; १०,७, ६][c]; १२, ४; ३६,[४; ६४,५], ६६,११; ८६,२५; ४८; ९९,५; १०३, ३[d]; १०७, [(१०३,२) २२]; ११०,१०; कौ २,८;३८५; ४३०;४८३;५४९; जै ३,१,१०; ३१,५; ३३,५; ३६, ८; ४३,५; ५३,७; -†रेण ऋ ९,१,६;९८, ७; मा १९, ४; का २१,१, ४; तै १, ८, २१, १; मै २, ३,८; ३,११,७; काठ १२, ९; कौ १, ५५२; २,६७९; १०३१; जै १, ५६, ८; ३, ५६, ७; पै १,९४, १§; -रेभिः ऋ ९, २०, [१; २८, १]; ६८, ७; १०१, [१६; १०८, ५]; कौ १, ५०६‡[e]; ५८४; २, ३१८; ६२४; जै १, ५२, १०‡[e]; ५९, ७; ३, २६, ४; ४०, १; ५२, ४; -रेषु ऋ ९,६,१[e]; ६३,१०; १९; -†रैः ८, २, २; कौ १, ५११‡[c]; २, ८५; ५५७‡[c]; जै १,५३,९‡[c]; ३, ८, ११; ४४, ३‡[c].

†वार-वत्- -वन्तम् ऋ १, २७,१; कौ १, १७; २, ९८४; जै १, २, ७, ३, २४, ५.

वारवन्तीय[f]- -यम् तै १, ८, १८, १; मै १,६, ७[!]; ४,४,९[!]; -यस्य तै ५, ५, ८,१; -येन तै ५,५,८,१;२; मै ४,४,९.

वारवन्तीय-त्व- -त्वम् तै ५, ५,८,१¶.

वारे-छा[g]- -ष्ठा खि १, ७,२.

२वार[h]- -रम् ऋ १,१२८,६;१५१; ५,५,१६,२; ९,११०,६[i]; पै ८, १९,६[?]; -रेभिः ऋ १०,७४,२.

†२वारण,णा(वप्रा.)- -णः ऋ १, १४०,२; ८,३३,८; ६६,८; कौ २,१०४२;१०४७; शौ २०,५३, २;५७,१२;९७, २; -णम् ऋ ६,४,५;९,१,८[j]; -णा ऋ १०, ४०,४; -णाः पै १९, २३,७; -[?]णेषु[k] ऋ १०, १८५, २; मा ३,३२; का ३,२, २४; मै १,५, ४; काठ ७,२; क ५,२.

वार(ण > )णी[l]- -णी शौ ५,१४, ११; पै ७, १,९.

---

[a]) सपा. घारम् <> घारान् इति पाभे. ।

[b]) पाभे. पृ २६९४ *k* द्र. ।

[c]) सपा. घारे <> घारैः इति पाभे. ।

[d]) पाभे. पृ २०७० *g* द्र. ।

[e]) सपा. घारेभिः <> घारेषु इति पाभे. ।

[f]) नाप. (साम-विशेष-) । छ>ईयः प्र. (पा ५, २,५९) ।

[g]) वित्र. (अश्विन्-) ।

[h]) नाप. (धन-, प्रकाश- प्रभृ.) । (√भृष् [वधा]>) *भृष- > यनि. (तु. पार. माल [धन-], वेतु. <√वृ 'वरणे' इति प्रायोवादः!) ।

[i]) 'वार् (अर्जुनेव) वेविद् (ये वेऽपि) ईम् (इमं [सोमम्]) अम्यनूषा (स्तुवन्तो भवन्ति), न (*अर्जुनेव [तत्कालमेव] अयं) सविता (क्षीरः) देवः (ईदृशः [सोमः]) वारं ([पानकामनाः] धनं) स्यूर्णुते (उद्घारयति, उज्ज्वालयति)' इति वा. (वेतु. वें. सा. ='वारम् [अन्धकारं] नाऽऽगमयति' इति, GRV. ='[स सोमः] सविता देवः न [इव] वारं [धनं] व्यूर्णुते [प्रकटयति]' इति?) ।

[j]) सपा. जं ४,४,८ जैत्रा २,३९१ मारयम् इति पाभे. ।

[k]) °णेषु या इत्यधिक-पदः शोधः (तु. छन्दः) । सपा. आपश्रौ ६, १७,१० प्रमृ. °णेष्वा (षु-आ) इति पाभे. अप्ययमेव शोधः द्र. । यतु वा अरणेषु इति शोध इति Benf. ORN. चाऽऽहतुः, तन्न । यनि. अपि अरण- इत्येतत्-पर्यायत्वदर्शनात् (तु. आपश्रौ १३, १९, ८, ORV. टि.) ।

[l]) वित्र. (*हरस्पन्नी- [एणी- = मृगी-]) । (√वृष् '*कांत' > भावे *वृष्- >) √*वृषि > *वृष- (ण > )णी- > यनि. । 'यथा मृगी अभिस्पन्दं (मर्मदने [मृगं] प्रति धावति, एवं) इन्द्र कर्तारं (हरस्पार्न

?वारसि[a] ऋ १, १३२,३.
वाराही- १वराह- द्र.
१वारि[b]->वारि-ति[c]- -तीनाम् खि ५, ७, ३, १०; मा २१, ५७; २८, ३१; ४४; का २३,६,१०; ३०, २, १०; ४, १०; मैं १, १०, ९¶; ३, ११, ५; ४,१३, ८[२]; काठ १९,१३;२६,३¶.
२वारि[d]->वारि-वाह[e]- -हात् पैं २०,४९,९.
३वारि- √वृ (वधा.) द्र.
वारिवस्कृत[f]- -ताय मा १६, १९; का १७, २, ३; तै ४, ५, २,२; मैं २, ९, ३; काठ १७, १२; क २७, २.
वारुक- √वृ (वधा.) द्र.
१वारुण- वरुण- द्र.
२वारुण[g]- -णाः शौ ७,८८,४.
वारे-वृत- √वृ (वरणे) द्र.
वार्का(र्य>)र्या[h]- -र्याम् ऋ १, ८८, ४.
?वार्णः[i] मैं ४,९,१२.
वार्त्रघ्न-, वार्त्रहत्य- वृत्र- द्र.
वार्ध्राण[,न]स[j]- -सः[k] तै ५,५,२०, १; मैं ३,१४,२०[l].
वार्ध्रीण[,न]स[m]- -सः[k] मा २४,३९; का २६, ८,४; काठ ४७,१०.
१वार्य[n]- -र्यम् ऋ १,२६,८; ८१,[९; ५,६, ६; १०,१३३,२]; १३९, १०;३,८,७; २१,[२; १०,२४, २];४,५३,१; ५,६,३; ६; १६, ५;१७,५; ३५,८;४१,१३; ४८, ५;६,१५,६; ७,१५, ११; १२; १६,५;४२,४; ८,२२,१८; २५, १३; ४३,३३; ९,३५, ३; १०, १७,७;६४,१५; मैं १,८,४; २, १३,८†; ४,१०,१†; १३,५†; ¶काठ ६,५; ८, १०; ९,८§; १०,७; १६, २१†; १७, १८†; २३, ८; २४, ७; २५, १; ६; २७, ३[२]; ४[२]; ८; २९, १¶;३९,१३†; ¶क ४,४; ७, ६; ३६,५;३७,८; ३८,४; ३९, ३;४२,३[२];४[२]; ४५,२; †कौ १, ६१; २,१०८८;११५२; †जैं १,

प्रति) उद्-ऋच्छतु (आवृत्य गच्छतु)' इति वा. (वैतु. PW. B. यनि. अप्रौढार्थे विप. इति, ?W. हस्तिवशार्थे नाप. इति च?)।

[a]) (√वृ 'आवरणे =रक्षणे'>) *वारस्-[नाप.(रक्षक- [यज्ञ-])] >-रसि [सप्त१]; वैतु. वाः, असि (तु. पपा.) इति द्वे पदे इति कृत्वा GW. प्रमृ. वार्- (नाप. [रक्षक-]) > वाः इति ] । 'यस्मिन् ऋतस्य वारसि यज्ञे क्षयम् वारम् (एव) क्षयम् अकृण्वत' इति वा. ।

[b]) नाप. (बन्धन-रज्जु-)। <√वृ '*बन्धने' ।

[c]) विप. > नाप. (बन्धक-)। बस. उप. (√तन् 'कृतौ'> भाप.) *ति- (=तति-) इति [तु. पृ १८०७ $r$; वैतु. भा (तैब्रा ३,६,१३,१) उ. म. PW. प्रमृ. नाप. (जलोद्भवा- [ओषधि-]) सत् वार्-इति- > बस. उप. (<√इ गतौ) इति] ।

[d]) नाप. (जल-)। व्यु. ?।  [e]) नाप. (मेघ-)।

[f]) नाप. (*मेघरूपजलकोशभृत्-, सेचनकृत्- [रुद्र-])। *वारि-+(√वस् '*माने'>) *वस्क- (कोश-)> पस. *वारि-वस्क- (मेघ-)+भृत- (धारिन्-) > उस. *वारिवस्क-भृत->यनि. (वैतु. उ. स्वार्थे < वरिवस्- (धन-) +कृत- इति, सा. स्वार्थे, K अपत्येऽर्थे <°वस्-कृत्- इति ?)। तु. सस्थ. सुवन्ति-, रोहित-, स्थपति- ।

[g]) विप. (*मध्यकोटिक- [पाश-])। तु. <√वृ(=√भृ) 'भरणे=*प्रवेशे, मध्यावस्थाने' (पं. √वठना [वैतु. सा. W. Gri. वरुण- > तस्येदमीयेऽर्थे यनि.])।

[h]) भाप. (स्तोत्र- [तु. स्क. MV.]) स्त्री. । (√वृ '*स्तुतौ'> भावे) *वार्-+(√कृ > भावे)कारिका- > पस. *वार्-कारिका- > यनि. । सस्थ. ?देवीम् > दैवीम् (देवविषयाम्) इति शोधः ।

[i]) शोधितः सन् पाठः एवं स्यात्—पञ्चपदः द्वादशाऽक्षरः जागतः पादः (शरावन्- [हेति-]>प्र१) शरावा, (आ √अक्ष् 'वेधने' >) *आऽष्टात्, ह, *वृषा (वृकीव सती) *परिवर्हिणः इति । 'सा हेतिः परिवर्हिणः (शत्रून्) आऽष्टात् (आ-विध्यतु नोऽस्मान्)' इति वा.। पृ ४७९ $h$ नेष्टम् ।  [j]) नाप. (खड्गमृग-)। *वार्ध्राण- (नासिका-)+ वृष-भ- (*शृङ्गवत्-)> सस. *वार्ध्राण-वृषभ- > यनि.। शेषं $m$ द्र.।  [k]) सपा. वार्ध्रा°<>वार्ध्री° इति पाभे.।  [l]) वार्ध्री° इति पपा.।

[m]) =वार्ध्राण[,न]स- । *वार्ध्रीण- =*वार्ध्राण- इत्येवान्तरम्। शेषम् $j$ द्र. (वैतु. पाका [५, ४, ११८] प्रमृ. इह बस. नस्- [नासिका-] इति उप., वार्ध्री- [पाका. वद्ध्री-] इति चोपमानभूतं पूप. इति?)।

[n]) विप. (*महार्घ- [वसु-, रत्न- प्रमृ.]), नाप. (धन- [तु. निघ ४,२]),। <२वार-+(तद्दर्थे स्वार्थे च) यत् प्र. तद्धितः। द्व्यच्कोय आद्युदात्तः (वैतु. पा ६, १, २१४ <√वृ 'वरणे'+ण्यत् प्र. इतीव [तु. या ५,१]) ?

६,७;४,१,५;२९,५, शौ १८,१, ४१†;४,४५; †२०,५६,६;९५, ३; -†र्यस्य ऋ [७,२४,६;२५, ६],८,४४,१८; काठ ४०,१४, कौ २,८८३, -†र्या ऋ १,५८, ३,३,११,९; ४,५५,९; ५,२३, ३; ६,१६, ५; ८,१,२२;[२३, २७;६०,१४]; ७५,२; ९,३,४, १८,४;२१,४;[४२,५; ६६,४]; ६३,३०; तै २,६,११,१; मै ४, ११, ६; काठ ७, १७; कौ १,५२१‡[a]; २, ६०८; जै १, ५३,११‡[a], ३,४९,७; ४,६,४; ७,१८,३$[b]; -†र्याणाम् ऋ [१, ५,३;२४,३; ८,७१, १३, १०, ९,५],६,५,३; ८,७१,११;१०, २४,३; तै ३,५, ११,३; मै ४, ९, २७; १०, ३; काठ १५, १२; कौ २,९१;९०५, जै ३, ९,५, ४,१४, ७; २९, १४; शौ १,५,४†;२०,६८,१२; -र्याणि ऋ १,३५,८; ११३,१५; ११४, ५;१४९,५;१५९,१; १६३,१३, १६४,४९; ३,५६,६; ५,४,३; ४९,३; [८०,६; ६,५०,८]; ७, २,७;१७,५;८,१९,२४;९,१०, २;१०,४५,११; खि ५,७,३, ४; मा १२,२८†;२८,१५;१६; १७;२९,२४†; ३४, २४†; ३८, ५†; †का १३, २, ११†,$३०, २, ४; ५, ६; ३१,३,१३; ३३, १,१८†; ३८,१, ५; †तै ४,२, २,४; ६,७, ५; †मै १,५,४$; ४,४,७; १३,८; १४, ३, काठ १६,९†;१९,१३;३७,९[c]; ४६, ३†; ४†; †कौ १, ५२८; २, ७५८;११२६; †जै १,५४,१०; शौ ७, ११, १†; १५, ३[c]; पै २०,३,१†; -र्येण ऋ १०, २७, १२.

वार्य-वृत,ता[d]- -तः काठ २४, ७¶; क ३७, ८; -तम् †काठ ८,१०; २३,८; २७,४; ¶क ७, ६; ३६,५; ४२,४; -ना मै १, ८,४¶; -ताः काठ २७,३[e]; क ४२,३, -तानि काठ २७,३; क ४२,३.

?वार्या- खि ५,७,२,११[f]; ४,१५; मा २१,६१[g]; का २३,६,१४[g]; मै ४,१३,९; काठ १९,१३.

वार्षागिर्- √वृष् द्र.

वार्षाहर[h]- -रम् मै ४,९,११.

वार्षिक-,१-२वार्षी- √वृष् द्र.

वा [,वा] ल[i]- -लः[j] मा १९, ८८; का २१, ६, ९; मै ३, ११, ९; -लाः तै ७, ५, २५, १¶; काठ २४,८¶; क ३८, १¶; शौ ९, १२,८; १०, ९,३;२२; पै १६, १३६, ३; १३८, २; -लात् शौ १०,८,२५[k]; -लान् शौ १२,४, ७; पै १७,१६,८; -लेभ्यः शौ १०,१०,१; पै १६,१०७,१.

*वाल-ज़ि[l]- -जेः शौ ९,१३,२०; पै १६, ७५,१०; २०,५६,६?[m].

वाल-तुप[n]- -पः मै ४,२,१४¶.

वाल-धान[o]- -नाय तै ७, ३, १६, २; काठ ४३,६.

वाल-प्रतिग्रथि(त>)ता- -ता काठ १५, ४¶.

?वालदुच्छ[p]- -च्छस्य पै २०,२०,२.

वालखि(ल्य>)ल्या[q]- -ल्याः तै ५, ३,२,५¶.

---

[a]) सपा. ऋ ९,१०७,२३ काव्या इति पाभे.।

[b]) पाभे. पृ २७८४ *f* द्र.।

[c]) सपा. तैब्रा २.७,१५.१ आश्रौ ४,१०,१ शांश्रौ ५, १४,८ सर्वताता इति पाभे.। [d]) =वारि-वृत-।

[e]) °तः इति पाठः ? यनि. शोधः (तु. क.)।

[f]) वसु (वसूनि) इत्यस्य विप. इति कृत्वा वार्य-> -र्या (वार्याणि) इति द्र.।

[g]) वार्या आ यक्ष्यते इति त्रीणि पदानि (तु. मा २८, १५;१६; वैतु. पपा. उ. म. प्रमृ. वारि आ य° इति?)।

[h]) नाप. (सामन्-)। वृषा हरिः इत्येतत्पदद्वयवन्मन्त्रः ऋ [९,२,६] प्रमृ., तदभिहतम्। BO [मै. माश. माश्रौ.], O. [आपश्रौ.] च °हार- इत्याहतुस्तच्चिन्त्यम् (तु. वैप २, ३खं.; ४ [यत्र हिश्रौ. पाठः शोधार्हः] च)।

[i]) =१वार-। शौ. पै. वा° इति।

[j]) पाभे. पृ २८२२ *r* द्र.।

[k]) वैतु. W. =बालक- इति ?।

[l]) तु. पृ ४३५ *a*।

[m]) वालदे इति पाठः ? यनि. शोधः।

[n]) नाप. (केश-समूह-)। पस. उप. < *स्तम्प्- (°वक- [गुच्छ-])।

[o]) नाप. (वाल-धि-)। कास. उप. अधिकरणे प्र.।

[p]) वालपुच्छ- इति वा °गुच्छ- इति वा शोधः ?।

[q]) विप.(अधिपोषणार्थमुपहिता-स्तनी- *अतिरिक्तधर्मिणी- [इष्टका-])। (√वृध् 'वृद्धौ'>भावे) *वर्धक-+(√भृ 'धारणे' > भावे) *भृत्य-> बस. *वर्धक-भृत्य-> *वद्दक-इल्य-> *वाडक-इल्प-> यनि. (वैतु. पपा. प्रमृ. °ल-खि° इति च्छेद इति, मा. सा. =वालखिल्यनामक-मुनिदृष्टा- इति च ?)।

१वाला[a]—>वाला-वृत[b]— -तः[c] काठ ६५, ४.

२वाला[d]—>वालापितृ[e]—>वाला-पित-स्थ— -स्थः[c] मै २,६,५.

¶वाव[f] तै १, ५, ७,५; ६; ८, ५; ६, ८, १; ७, २,२; ६, ५; ७; २, १, ५,४; ५; २,४,८; ३,२, ७; ४, २, ३; ३, २; ५, १-२, ६; ३, ४; ७; ११, ८; ६, ३, १; ६, १; ८, ५; ९, ५; ७; ८; ३, १, ७, २[२]; ३[२]; २, २, १; ४, २; ३, ८, ३; ५, २,२, १; ५, १०, ७;६,२,१; ६,३; ८,४; ५; १०, २; ७, २, २; ६,१,४, ३; ९;६,३;८,४; ११,६; २,८, ४; ६; १०-११, २; ३,२,२;९, २; ४, ३, ४; ५, २[२]; ८,२; ६, १, ५; २, ३; ११, १; ७,१,१, ४; २, १,२;२,३; ४,२;९-१०, ३; ३, ५,२; ३;६,१; ७,२; ३; ९, २; ३; ४, १, १; २; २, ४; ५; ४, २; ३; ५,१; ११,१; ५, २, २; ७, १; मै १, ४, ५; ९; ५, ८; १२[२]; ६, ३; ५[२]; ६; ११; १२[२]; १३[४]; ७, ५[२]; ८,२; ९[२]; ९, ५[४];६;७;१०,८;१३[२]; १५; ११, ८; २,१,४;११; ३,१; २; ५[२]; ७; ४,१; ३[३]; ५,२;३; ६; ११; ३, १, ९; २, ५; ९; ३, ३[६]; ९; १०; ४, २; ४[३]; ५; ९; ६, ५; ६; ८;. ७, २; ५[४]; ७; ८[२]; ९; ८, ३[२]; ४[३]; ६[३]; ८; ९, २; ३; १०, १[२]; ४, १, ३; ४;६;१०; १२; १४;२, १; ११; ३,२[२]; ४[२]; ५;६[२];७; ८; ४,२; ४;६;९;१०;५,६[२]; ६,६; ७[२]; ९; ७, ३[२]; ६; ९;८, १[२]; काठ ६,१;३; ४; ७; ८; ७,१०; ८,१[२];२; ३;४[४]; ५;१०[२];११[२]; १३; ९, १; २; १०, ७[३]; ११, १;८; १२,३[४]; १०; १२[२]; १३, ८; १२; १९, २; २१, ५; १२; २२,२; ४[३];६;९[२]; १०[२]; १२[२]; २३, ७[२]; ८; १०; २४,८; १०; २५,३[२]; ७[३];९; २६,१०; २७, २;१०[२]; २८,३; ६[२]; २९, १[४]; ७;१०; ३०,१; ३१,२; ३२,१; ६; ३३, १; ४; ७; ८; ३४,१[५]; ४;८;९[२]; १०; १७[२]; ३६, ३; ७[२]; ३७, ११[२]; १२[३]; क ३, १२; ४, ३; ६; ५, ९; ६, ६[२]; ७; ८; ९[३]; ७, १; ६[२]; ८[२]; ८, १[२]; ४; ३१, २०; ३४,१; ३५, ३[२]; ४[२]; ५; ३६, ४[२]; ३७, १; ३८, १; ३; ६[२]; ३९, ५[२]; ४०, २; ४१, ८; ४२, ३; ४४, ३; ६[२]; ४५, २[४]; ८; ४६, ३; ४; ४७,२.

√वावच्   √वच् (वधा.) द्र.

√वावद्, वावदत्—   √वद् द्र.

?वावदाकाम्[g] पै १७, १५, १०.

वावनः, वावनत्   √वन् द्र.

?वावना पै ८,९,१०.

√वावश्   √वश् (वधा.) द्र.

√वावश्, वावशती—   √वाश् द्र.

१वावशान—   √वश् (वधा.) द्र.

२वावशान—   √वाश् द्र.

?वावसः[h] शौ १९, ३९, ९.

१वावसान—   √वस् (निवासे) द्र.

२वावसान—   √वस् (आच्छादने) द्र.

वावहि—   √वह् द्र.

†वावात, ता[i]— -ता ऋ ४,४,८[j]; ८, ४,१४; खि ५, १३,६[j]; तै १, २,१४, ३; मै ४, ११, ५; काठ ६, ११; शौ २०,१२८,११[j,k].

---

[a]) नाप. (*कोश-)। (√वृ 'आवरणे'>) *वा(र>) रा—> यनि.। [b]) विप. (कोशच्छन्न- ⌊असि-⌋)।

[c]) सपा. °लावृतः (आपश्रौ १८,१०,२३ हिश्रौ १३,४, १० च)<>°लापितस्थः <> आपश्रौ १८,१०,२१ °लाभिवीतः इति पाभे.।

[d]) भाप. (आदरण-)। [e]) नाप. (*कोश-)। *वारा-भृत्— (आवरणकृत्-)> यनि.।

[f]) विनिश्चयार्थे अव्य.। वै+ (*आ-वृत्— ⌊पुनर्⌋ > तृ१) आवृता > *वाआवृता > *वावा > यनि. इति पदद्वये सद् विपरिणतमधिसंहितं च। वै इत्यस्य अव्य. सत् आवृतो यथा स्यात्तथेति किवि. इव द्र. (वैतु. Web [तु. WAG १, २६८ b]< वै+एव इति?)। कि ८३ अव्युत्पन्नमेव द्विस्वरमिति च।

[g]) पाठः? नाप. (सदान्वा-)।

[h]) वायसः इति RW. WI. शोधः साधीयान्। एतदनुसारेण वायस—(व्यप. ⌊तु. इक्ष्वाकु-⌋)> -सः इति; वैतु. पपा. वा, वसः इति द्वे पदे तदनुसारी सा. वस— (देव-विशेष-)> -सः इति। वा वासः इत्यपि मूको. (तु. W. WI.)।

[i]) विप. (*भावभृत,ता- ⌊हरि-, गिर्-⌋)। भाव—+ भृत,ता— (भाप.)> वस. *भाव-भृत,ता— > यनि. (वैतु. पपा. =ववा° इति, वें. सा. PW. GW. प्रमृ.< √वन् 'संभक्तौ' इति, ⌊पक्षे⌋सा. <√वा इति, ⌊पक्षे⌋ भा. <अत्र √वा वा सं√वा वा सं√वन् वेति च)।

[j]) नाप. (भावभृता- नृपत्नी-)।

[k]) °ता इति शंपा. सात. च।

वावातृ[a]- -तुः ऋ ८,१,८[b]; १६.
वावृतः पै ५, १७, २.
वावृधत्-, वावृधध्यै, वावृधान-, वावृधेन्य-, वावृध्वम्- √वृध् द्र.
वावृपाण- √वृप् द्र.
√वाश् (बधा.)>वाशि, वावश्, वाशति ऋ ५,५४,२.
वावशे ऋ २, १४, ९[c]; ववाशिरे ऋ २,२,२[d]; वावश्रे ऋ ९, ९४, २[d]; वाश्यते पै ५, ३१ १.
अवाशयः ऋ १, ३१, ४[e]; †अवीवशत्[f] ऋ ९, ३२, ३; ३४,६; ७६,४; ८६,१९[g]; १०७, २६[h]; कौ २,१२०; जै ४,२७, ५; अवीवशन्त[f] ऋ १०, ६४, १५; †अवावशन्त[f] ऋ ९,१९, [४; ६६,११]; कौ २,८; जै ३, १, १०; ५३,७; अवावशन्त ऋ ९, ९०, २[i]; कौ १, ५२८; २, ७५८; जै १, ५४, १०; अवीवशन्[f] ऋ ९, २१, ७.
†वावश(त्>)ती- -ती ऋ ४, ५०, ५; तै २,३, १४,४; मै ४, १२,१; काठ १०,१३; शौ २०, ८८, ५
२†वावशान,ना- -नम् ऋ ९,९५, ४; -नाः ऋ १, ७३,६,३,५७, ३; ४, २६,२; ७,५,५; ३६,६; ५६, १०[j]; ९, ८६, ३१; ९७, २२; ३४; ३५; १०,१२३,३[j], तै २, १, ११, २[j]; मै ४, ११, २[j]; काठ ८, १७[j]; कौ १, ५२५; ५३७; २, २०९, २१०; जै १, ५४, ३; ५५, ५; ३, १९, ४; ५.
वाशि(त>)ता[k]- -ता पै ६, १०, १; ९; -ताम् काठ १३, ४¶, पै १, ५५, १; ५, १५,५; ६, १०, ४; ८, २०,४; ९,२४, २[l], -तायाम् पै ६, १०, ७;८; -०ते पै ६, १०, ६.
वाश्यमा(न>)ना- -ना शौ १२, ७,५; पै १६, १४२, ८.
वाश्र,श्रा[m]- -श्रः ऋ ९, ३४, ६; -श्रम् ऋ १०, ९९, १; -†श्रा ऋ १,३८,८; २, ३४, १५; १०, ११९,४,१४९,४; तै ३, १,११, ५; मै ४,१२,५; काठ ११, १३; शौ १२, ३, ३७$; पै १७,३९, ७$; -†श्राः ऋ १,३२,२; ३७, १०; ९५, ६; ८, ७,७; ९,१३, ७; ७७, [१; १०, ७५, ४]; मै ४,१४,१३; कौ १,२२१; ५५६; २,५४३; जै १,२३, ८; ५७,३; ३. ४२, ९; शौ २,५, ६; $४, १५, १; ५; पै ५,७, १$; ८, १४, ६; १३, ६, २; -श्राय ऋ ८,४३,१७; -श्रासः ऋ ८, ७, ३; ४४,२५.
वाश्र-तर- -रः काठ ३३,४¶.
?वाश्रु[n] खि १,५, ८.
१वाश-,२वाश- √वश् (बधा.) द्र.
?वा शा तु मा वृत्र त मृड तारम् पै १३, १०, ८.
?वाशि पै ३,४,६.
?वाशितेयम् पै ३, ३९, ३.
१वाशी- √वश् (बधा.) द्र.
२वा(शि>)शी[o]- -शी ऋ ८,१२, १२; -शीः ऋ १, ८८, ३; -शीभिः ऋ १, ३७, २; १०, ५३,१०; १०१,१०; -शीम् ऋ ८, १९, २३; २९, ३; -शीषु ऋ ५. ५३, ४; -श्या पै १६,

a) विप. (भक्तिमत्- [सखि-]), नाप. (भक्तिमत्-)। भाव-+(√भृ 'धारणे'>भावे) *भर्तृ->बस. *भाव-भर्तृ- > यनि. (वैतु. पपा. वधा° इति, वें. सा. PW. प्रमृ. < √वन् इति?)।
b) वैतु. वें. सा. [पक्षे] √वा>वावातु-> -तुः इति?।
c) '(इन्द्रः) वः अभि (अभिलक्ष्य) वावशे' इति वा.। एतदनु पृ ३५६ अभि√वश्>°वावशे इति नेष्टम्।
d) तु. सस्थ. टि. अभि। e) धा. दीप्तौ वृत्तिः। 'त्वं पुरूरवसे (प्रस्तुनिमते) सुकृते (सुकर्मणे) मनवे (मानवाय) द्यां (दिवम्) अवाशयः' इति वा. (वैतु. स्क. धा. कामे वृत्तिरितीव, वें. सा. PW. प्रमृ. यनि.< √वाश् 'शब्दे' इति च?)। f) तु. PW. GW. प्रमृ.; वैतु. वें.सा. < √वश् इति?। g) पाभे. पृ ११७८ g द्र.।
h) 'ज्योतिर् जनयन् (तेन द्रोणकलशे निहितानां गवां [पयसां]) निर्णिजं (उद्दीप्तं) न (*इव) कृण्वानः (सोमः [तः]) गाः अवीवशत् (शब्दं कारयति [हर्षवशात्])' इति वा.। i) तु. सस्थ. टि. अभि।
j) पृ ७४५ k द्र.। k) विप., नाप. (गो-)।
l) सपा. शौ ५,२०,२ वासिताम् इति पाभे.।
m) विप. (सोम-, धेनु- प्रमृ.), नाप. (हम्मारवयुक्ता- [गो-])। कर्तरि रक् प्र. (पाउ २,१३)।
n) वा, आश (लिटि प्रपु१ < √अश् 'व्याप्तौ') इति शोधः (वैतु. संस्कर्ता आशं इति?)।
o) नाप. (छेदनी-)। (√वश्च्>) *व्रशि,शी-> यनि. (तु. GW.; वैतु. या ४, १९ पाउ ४, ११८ स्क. सा. प्रमृ. < √वाश् 'शब्दे' इति?)।

४२,३[a].

वाशी-मत्[b]- -मन्तः ऋ १, ८७, ६[c]; ५, ५७, २; †तै २,१,११, २[c]; ४,२, ११, २; मै ४,११, २†; काठ ८,१७; -मन्तम् ऋ १०,२०,६?[d].

?वाश्च्छास्[e] पै ४, १३, ५.

वाश्यमान-, वाश्र- √वाश् द्र.

√वास् > वासि( शब्दे),वासयसि ऋ ७, ३७, ६[f].

वासि( त> )ता[g]- -ताम् शौ ५, २०,२.

१वासु- √वस् (निवासे) द्र.

२वासु- √वस् (वधा.) द्र.

?वासतीभ्यः पै २, ५८, २.

वासतेय- √वस् ( निवासे ) द्र.

?वासनुम् पै ८, ३,१०[h].

वासन्त-, वासन्तिक- √वस् (वधा.) द्र.

वास-मथ- √वस् ( निवासे ) द्र.

वासयत्- √वस् (आच्छादने) द्र.

वासयित्वा √वस् (निवासे) द्र.

†वासर[i]- -रम् ऋ ८, ६, ३०; काठ २, १४; कौ १, २०; जै १, २, १०; -राणि ऋ ८, ४८, ७[j]; काठ १७,१९; पै १, ४६,२.

वासरी[k]- -रीम् ऋ १, १३७,३.

वासव- √वस् ( वधा. ) द्र.

?वासवसैपाह्यत पै ७, ८, ५.

१वासस्- √वस् (निवासे) द्र.

२वासस्- √वस् ( आच्छादने ) द्र.

वासात्य[l]- -त्यौ खि १,२,५.

√वासि √वस् ( निवासे ) द्र.

√वासि √वस् ( आच्छादने ) द्र.

√वासि √वस् ( वधा. ) द्र.

वासिष्ठ- २वसिष्ठ- द्र.

वा( सि> )सी[m]- -स्या शौ १०, ६,३[a].

वासुदेव-√वस् ( वधा. ) द्र.

वासो-दा-, °वाय- √वस् (आच्छादने) द्र.

१वास्तव्य-, १वास्तु- √वस् (निवासे ) द्र.

२वास्तु[n]- -स्तोः मै २, २, ४.

२वास्तव्य[o]- -व्यम् मै १, ६, ४[२]; -व्याय मा १६, ३९; का १७, ६, ३; तै ४, ५, ७, २; मै २, ९, ७; काठ १७, १५; क २७,५.

वास्तु-प[p]- -पाय मा १६,३९.

वास्तु-ह[q]- -हानि मै ४, ६,२.

---

[a]) सपा. वाश्या (हिश्रौ ४,२,४० च) <> वास्या (आपश्रौ ७,९,९ प्रमृ. च) इति पाभे.।

[b]) विप. (अग्नि-, मरुत्-)।

[c]) तु. वें. प्रमृ.; वैतु. भा. सा. वाशी- =वाच्- (तु. निघ १,११) इति ?।

[d]) अर्थः ? इह √वश 'दीप्तौ' > १वाशी- इति कृत्वा विवेकः सुवचः स्यात् (वैतु. PW. प्रमृ. यनि. इति, वें. सा. वाशी- [स्तुति-] इति च ?)।

[e]) पाठः? (तु. सपा. शौ २,२५,५ गुच्छन्ति इति पाभे.)।

[f]) वैतु. सा. प्रमृ. <√वस् 'निवासे' इति ?।

[g]) नाप. (गो-)। तु. शंपा. सात. मूको.। सपा. पै [९, २४,२] RW. °शि° इति पाभे.। [h]) पाठः ? (तु. सपा. शौ ४, ९,१० यामुनम् इति पाभे.)।

[i]) विप. (दीप्र- [ज्योतिस्-, अहन्-])। (√भास् 'दीप्तौ' >) *भास्वर्- > यनि. [वैतु. या [४,७] प्रमृ. < ?वेसर- (< वि-सर- [<वि√सृ]) वा, वि√वस् > वासि वेति,<√वस् [निवासे] इति वें. सा.; < वस् (*र् >)र्-([भाप.]=उषस्->र्-) इति PW. GW. प्रमृ.]।

[j]) विप. ( दीप्तिदीप्र- =ग्रैष्म- [अहन्-]) । √वस् 'दीप्तौ' >भावे वास्- (भास-, घर्म-) + (√घृ 'दीप्तौ'> कर्तरि) *वर्- (दीप्यमान-)>उस. *वास-वर्->यनि.।

[k]) विप. (दीप्रा- [धेनु-]) । *भास्वरी- > यनि. (तु. [तात्पर्यतः] PW. GW. प्रमृ.; वैतु. वें. सा. धा. आच्छादने वृत्तिरिति)।

[l]) विप. ( प्रातरुद्भव- [अश्विन्-])। वसाति- [नाप. (प्रातर्वेला-) < √वस् 'दीप्तौ' + आतिः प्र. उसं. (पाउ १,७८; वैतु. भा. सा. [तैआ १, १०, २] धा. निवासे वृत्तिः)] + प्राग्दीव्यतीयः यञ् प्र.। शेषं वैप २,३ खं.; ४ द्र.। [m]) = २वाशी-।

[n]) नाप. (*भस्मन्-, उत्कर-, फल्गु-)। (√आप् 'रिक्तीभावे =निःसारत्वे' [तु. √रिच्] >) *आप्तु- > यनि. (तु. २आस- [ पं. भस्स, राख, Eng. ASH, भस्मन्-]; वैतु. = १वास्तु- इति प्रायोवादः ?)।

[o]) विप. (भस्माऽऽच्छन्न- [अग्नि-, रुद्र-])। तदस्याऽस्तीत्यर्थः यत् प्र. उसं. [पा ५, २,१२० (वैतु. < १वास्तु- इति प्रायोवादः, < वस्तु- इति सा [तैआ १, ४,४,१])]।

[p]) विप. (=*२वास्तव्य- [रुद्र-])। < *वास्तु-प्र- (वैतु. < १वास्तु- इति प्रायोवादः?)।

[q]) विप. (*भस्म-वत्- [पात्र-])। उस. उप. (√धा 'धारणे' > कर्तरि) *ध- > यनि. (वैतु. हु- < √हा 'त्यागे' इति प्रायोवादः ?)।

वास्तव[a]- -स्तवम् मै २,२,४.

वास्तव-मय[b]- -यम् मै २,२,४[c].

वास्तेयी- वस्ति- द्र.

वास्तोष्पति-, °पतीय-, °पत्य- √वस् (निवासे) द्र.

वास्य- √वस् (आच्छादने) द्र.

१वाह-, २वाह-, वाहस- √वह् (बधा.) द्र.

वाहस्[c]- -सः मा २४,३४; का २६, ७,४; तै ५,५,१३,१;१४,१[d]; मै ३,१४,१५; काठ ४७, ३; ४[d].

वाहादव-, वाहिनी-, वाहिष्ठ- √वह् (बधा.) द्र.

वाहीक[e]- -कम् पै ९,७,५.

वि ऋ १, ३६, १[f]; १८०,७[g]; १८१, ५[h]; ३,७,४[i]; ५४,८[j]; ५८,२[k]; ४,६,११[l]; ७,१,२[m]; १०,२[n]; ९, ३,७[o],८[o]; ८६, ३४[p]; १०९, १६[q]; ११२, १[r]; १०, ८०, ६[s]; ८५, ३३[t]; ८६, २०[u]; †मा ११,२७[f]; ३८, १७[f]; †का १२, ३, १०[f]; ३८, ४, १[f]; तै १, ५, १०, १[v]; २,५,१,१[w];

[a]) नाप. (*अनुप्तविरोहि-वास्तुक-शाक- [तु. पं. बाथू-, हिं. बथुआ-]) । *वास्तु- (=*२वास्तु-) > *वास्तु-वृध- (*उत्कर-विरोहिन्-) > *वास्तुक- > यनि. (तु. मै २,२,४) । [b]) विप. (वास्तुकात्मक- [चरु-]) ।

[c]) नाप. । अर्थः व्यु. च ? । [d]) पामे. पृ१२९५ *h* द्र. ।

[e]) =बाह्लीक- (तु. मूको) । विप. । [f]) धूमम् इति द्वि. युक्तः वर्जनेऽर्थे कप्र. उसं. (पा १, ४,८८) ।

[g]) अव्य. (=*नञ्) । 'वयं चित् (एव) हि सत्याः जरितारः (स्तोतारः [सन्तः]) वा त्रिपन्यामहे (प्रस्तुमः) वि(न [तु]) हितावान् (*धनवान् [सन्नपि]) पणिः' इति वा. (वैतु. सा. GRV. प्रमृ. वि [युज्यताम्] इति क्विउ.) ।

[h]) वा. ? । तु. पृ २४०९ *e* च सस्थ. टि. हुरि- च ।

[i]) पाठः ? *वी यद्र. ।

[j]) स्वाअ. । [k]) अस्मत् इति पं. युक्तः वर्जनेऽर्थे कप्र. उसं. (पा १,४,८८) । 'पणेः मनीषां (हिंसासंकल्पम्) अस्मत्तः दूरं जरेथां (प्रास्यतम्)' इति वा. (तु. GRV. प्रमृ ; वैतु. वें. सा. वि···जुरेथाम् इति) ।

[l]) वि ऊँ धाः इति पपा. ? वि+(√*मृध् =ऋध् '*स्तुतौ' > भावे) *मृधस्- > बस. *वि-मृधस्- (विशिष्ट-स्तुतिकृत्- =[होतृ-]) > नैप्र. *वि-ऊधस्-> व्यूधस्- > व्यूधा- इत्येकपदः शोधः (तु. सस्थ. √यज् > युजत्- > -जते इति; वैतु. वें. सा. PW. प्रमृ. पपा. अनुसरन्तः ?) ।

[m]) दुरः (द्वाराणि) इति द्वि. युक्तः वर्जनेऽर्थे कप्र. उसं. (पा १,४,८८) । 'यः पणीनां दुरः वि(द्वारोपलक्षित-गृहवर्जम्) नः (अस्माकं) पुरुभोजसम् अर्कं (यज्ञं) पुनानः (*वृणानः), स सुक्रतुः (अग्निः) राम्याणां (रात्रीणां) तमः तिरः ददृशे' इति वा. (वैतु. वें. सा. GRV. = वि√वृ 'आच्छादने' [तु. ऋ ६,१७,६ प्रमृ.] इतीव ?) ।

[n]) विवेकेऽर्थे स्वाअ. (तु पृ ९०२ *d*) ।

[o]) नैप्र. <अभि इति कृत्वा दिवम् इति द्वि. युक्तः कप्र. द्र. (तु. टि. पृ ७३४ *i*; वैतु. इतरे सर्वे यक. वि√धाव् इति व्या√सृ इति चेच्छन्त उभयत्रेदं ग. एवेति ब्रुवाणाः वा. प्रति पर्यनुयोज्याः) ।

[p]) अव्ययानि पृथ्व्या इति द्वि. युक्तः तिरोऽर्थे कप्र. (तु. ऋ ९,१०९,१६; वैतु. अन्ये वि√धाव् इति योग इति ?) । शेषं सस्थ. सुर- इत्यत्र द्र. ।

[q]) वारम् (*वस्त्रम्) इति द्वि. युक्तस्तिरोऽर्थे कप्र. । =(√व्यध् 'वेधने' >कर्तरि) विध्- > (क्रिवि. न.) विध् > *वि, (*ध्वारम् > द्वा° >) वारम् (तु. ऋ ९, ८६, ३४; वैतु. सा. PW. प्रमृ. वि+ [√क्षर् >] अक्षाः इति योग इति) । सस्थ. अव्य- इति < (√भू [=*पू] >) √*ऊ 'पवने' (वैतु. अन्ये < अवि- [मेषी-] इति ?) । [r]) विविधार्थे स्वाअ. ।

[s]) *अव्य. (*पृथक्, विविधम्) । √विध् (√व्यध् '*पार्थक्ये' > ल्यपि कृति) *विध्य- > *विज्झ- > *वि(ह>)अ > यनि. (वैतु. वें. सा. वि···ईळते इति, GW. विजाताः इति च योगाविति ?) ।

[t]) अनेकीभावे स्वाअ. (तु. पृ ११५६ *o*) ।

[u]) योजना इति द्वि. युक्तः तिरोऽर्थे कप्र. । '(धन्वकृन्त-त्राभिप्रेतयुद्धात्मकानि) कति स्वित् (यानि कान्यपि) योजना (व्यासञ्जनानि) वि (अतिक्रम्य = तन्मध्यतोऽवसरमाप्य) नेदीयसः (समीपवर्तिनः [सतः अस्माकं]) गृहान् (तथा-भूतेषु गृहेषु) अस्तं (*निवासम्) उप एहि' इति वा. (वैतु. वें GRV. विस्तारे स्वाअ., सा. वि···एहि इति योग.; GW. वि [ तिष्ठन्ति] इति क्विउ.) । अत्र विषये पृ १०२५ *a* यदुक्तं तत्रार्य विशेषः ।

[v]) परिवर्तनेऽर्थे स्वाअ. (वैतु. भा. सा. PW. वि-परि-दधात्वहे इति) ।

[w]) अनेकीभावे स्वाअ. (वैतु. अन्ये ग. मन्वानाः) ।

८, २[a]; ६, ६, ४[a]; ४, १, ३, ४†[b]; ६, ४, ९, २[c]; मै २, ७, ३†[b]; १२, ५[d]; ४, ९, ३†[b]; काठ १६, ३†[b]; †कौ २, ५१०[e]; ६१२[f]; ६१३[f]; †जै १, ४१, २; ४; ३, ४०, ६[e]; ४९, १०; ५०, १; पै २, ३१, ३?[g]; २०, ४६, ४?.

वि[h]- वयः ऋ १, २४, ६; २५, ४; ३७, ९; ४८, ६; ४९, ३; ८५, ७; ८८, १; १०३, ७; ११८, ५; १२४, [१२; ६, ६४, ६]; १४५, ५; १६६, १०; २, १९, २; २८, ४; ३१, १; ४, ४३, ६; ५, ४१, १३; ५९, ७; ७३, ५; ७५, ६; ६, ४६, १४; ६३, ६; ७; ७, ३६, ५; ९७, १; १०४, १८; ८, ३, [२३; ७४, १४]; ५, ३३; २१, ५; ४७, २; ३; १०, २७, २२; ४३, ४; ६८, १; ७३, ११; ८०, ५; १२७, ४; खि ३, १९, १; मा २, १६; का २, ४, ३; †तै १, १, १३, १§; ३, ४, ११, ३[i]; ४, १, ११, ३; ३, १३, ७; मै १, १, १३; ४, १, १४¶; १२, ६†; काठ १, १२; ९, १९†; २३, १२†; ३१, १४[j]; क १, १२; ४७, ११; †कौ १, ३१९; ३६७; ४०७; †जै १, ३३, ७; ३८, ८; ४५, ९; शौ ६, २, २; ८, ४, १८†; †२०, १६, १; १७, ४; पै १६, १०, ८†; १९, १, ६; २०, ५२, ८†; †विः ऋ १, १८३, १; ४, २६, ४; ५; ९, ४८, ४; ६२, १५; १०, ११, ४; कौ २, ११९०; जै ३, १७, १०; शौ १८, १, २१; †विभिः ऋ १, ४६, [३; ८, ५, २२]; ११७, १४; ११९, ४; ५, ५३, ३; ७४, ९; ७५, ५; ६, ६२, ६; ८, २९, ८; कौ २, १०८०; विभ्यः ऋ २, ३८, ७; ४, २६, ४; †विम् ऋ २, २९, ५; ३, ४५, १[k]; १०, ११५, ३; मा २०, ५३[k]; का २२, ५, ७[k]; मै ४, १२, ६; जै १, २६, ४[k]; शौ ७, १२२, १[k]; वीनाम् ऋ १, २५, ७; †१वेः[l] ऋ १, ११६, १५; १२०, ३; ३, ५, ६; ५४, ६; ४, २७, ४; ४०, ३; ६, ४८, १७; १०, ३३, २; मा ९, १५; का १०, ३, ८; तै १, ७, ८, ३; मै १, ११, २; काठ १३, १४.

विंशति[m]- -तिः ऋ १, ८०, ९; १६४, ११; मा १८, २५[i]; का १९, ८, २[i]; तै ४, ७, ११, २; ५, ३, ३, ३¶; काठ २०, १३¶; शौ ५, १५, २; ९, १४, १३†; १०, २३, १७; ४७, ५; पै १, ९४, १; ६, २०, ५; ८, ५, २; १६, ६७, ११†; -तिम् ऋ ५, २७, २; ६, २७, ८; ७, १८, ११; ८, ४६, २२; ३१; १०, ८६, १४; २३; तै ७, ३, ९, १¶; मै ४, ५, ३¶; शौ ४, ३, ३: †२०, १२६, १४; २३; पै २, ८, ३; -ती[n] मा २७, ३३; का २९, ३, ६; -त्या ऋ २, १८, ५; मै ४, ६, २[n]; शौ ७, ४, १[n]; पै २०, १, १०[n]; -त्यै तै ७, २, १३, १; १५-१८, १; काठ ४२, १; ३; ५-८.

---

a) विशेषार्थे स्वाअ. । b) तु. पृ २८२९ f द्र. ।

c) अभिधेयार्थे स्वाअ. (वैतु. अन्ये ग. स्वीकुर्वन्तः)। सपा. मै ४,६,२ विन्यद्भुः इति पाभे. ।

d) पाभे. पृ २११९ p द्र. (यत्राऽर्थ विशेषः)।

e) तु. पृ २८२९ p । f) तु. पृ २८२९ n ।

g) अभि इति शोधः । 'विभिः (*भास्यम्) इन्द्रं इष्यता (इर्षयता) नः (अस्माकं) पाशान् (अश्वान्) *अभि (प्रति [कप्र.]) इय आचरत (आगच्छतु [इन्द्रे तुष्टे सति अस्माकं भाग्यं फलवद् भवतु])' इति वा. (वैतु. BKA. वि- [शकुनि-] >विः इति शोधः इति कृत्वा सस्थ. पात- इति जातपर्याय इतीव ?) ।

h) नाप. (शकुनि- [उपनारात् इत्यादि-])। (*उद् √वी [=उद् √वी] >)*उत्रि- >यनि. (वैतु. <√वी इति पाउ [४,१३४], <√वा इति BDY[९१] ?) ।

i) तु. IC.; वैतु. भा. =अन्न- इति, सा. =आयुस्- इति? [सपा. ऋ. सध्याख्यानव्याघातापत्तेः]।

j) सपा. हिश्रौ २,४,२२ वयांसि इति पाभे. ।

k) पाभे. पृ ७६१ d द्र. । l) ??२वेः यद्र. ।

m) विप. (दशकद्वयात्मक-), नाप. स्त्री. (दशकद्वयात्मक-संख्या-)। द्वि-+*दशति-(दशति-)>द्विस. *द्विदंशति- > *विदंशति- > (*वीं° >) यनि.; वैतु. या (३, १० [तु. BBY ४, WAG १, २२९ c; ३, १८७ a]), PW. प्रमृ. उप. =दशत्- इति वा दशति- इति वा [तथा सत्यनुस्वारस्य हि दुरुपपदत्वं द्र.], पा [५, १, ५९] <(द्वि-+दशत्->) *वि-+शतिच् प्र. इतीव?)।

n) तृ१ द्र. । सपा. °ती (माश ४,४,११,५ शांश्रौ ८, ३,१० च) <> °त्या (तैआ १,११,८ आश्रौ ५,१८, ५ च) इति पाभे. ।

विंशु[a]- -शः तै ७, ३, १,२¶.
विंशति-प्रत्य( ति-अर् > ) र्ही[b]- -राभि खि १, २, १२[c].
वि-ककर[d]- -रान्[e] मा २४,२०; का २६,४,५.
¶वि-कङ्कत[f]- -तः तै ३, ५, ७, ३; -तम् तै ६, ४, १०, ५; मै ३, १, ९; काठ १९,१०[२]; २१, ९; २७,८; क ३०, ८[२]; -ते तै ६, ४, १०, ५.
विकङ्कती- > विकङ्कती-मुख[g]- -खाः शौ ११, १२,३.
१¶वैकङ्कत[h]- -तम् तै ६,४,१०, ६; काठ २७,८.
¶वैकङ्कती- -ती तै ३,५, ७, ३; मै ३, १, ९; -तीम् तै ५, १, १, ६; १०, २; ४, ७,४; मै ३, १,९; काठ १९, १०[२]; २१, ९; क ३०,८[२].
२वैकङ्कत[i]- -तेन शौ ५, ८, १;
पै ७,१८,१.
?विकंगतं[j] पै ८,१२,४.
विकट्, टा[k]- -टः[l] पै २०,१३,१०; -०टे ऋ १०,१५५,१.
१वि-कर[m]- -रान् काठ ५०,४[e].
२वि-कर- वि √कृ द्र.
१वि-कर्ण (वप्रा.)- -र्णः शौ ५, १७, १३[n]; -र्णम्[o] काठ ३३, ६¶; -र्णस्य पै १,५८,३.
२वि-कर्ण-> ¶विकर्णी[p]- -र्णी तै ५, ३,७,३;४; काठ २१,३[२]; क ३१, १८[२]; -र्णीम् तै ५,३,७,३; ४, २[१]; मै २, ७, ४[१]; काठ १९,४[१].
¶वि कर्ति- -र्त्तिः तै ५,४,७,७.
वि-कर्तृ- वि √कृ द्र.
विकर्या- वि √कृ द्र.
वि-कर्षु- वि √कृष् द्र.
वि-कल्पक- वि √क्लृप् द्र.
वि √कस्[q] > वि-कसुक[r]- -कः[s] मै ४,१४,१७; शौ १२, २,१४.
वि-कस्त- -स्तम् ऋ १, ११७, २४; मा ११, ३९[t]; का १२,
वि √काश् > चाकश्, विचाकशीति शौ १३, ३, १[u]; विचाकश. पै २०,२८,२.
†वि-चाकशत्- -शत् ऋ १,२४, १०; ८, ७३,१७; ९१, २; १०, ८६, १९; शौ २०, १२६, १९; पै ४,२६,२.
वि √कि, वि ''चिकाय ऋ १०, ८९,३.
वि √कित् ,> चिकित्स, चेकित्, . विचिकेतत् ऋ १,१५२,२. विचिकेत काठ ३५,१३; क ४८, १३; †विचिकिते ऋ १,७१,७; २,२७,११; तै २,१,११,५; मै ४,१४,१४.
विचिकित्सति मा ४०, ६[v]; वि '''चिकित्सत् ऋ ४,१६, १०;

a) पूरणार्थीयः डट् प्र. । b) वस. । वैप१ द्र.
c) °शतिप्रत्य° इति स्वरः? यनि. शोधः ।
d) नाप. (पक्षि-विशेष-) ।
e) सपा. काठ ५०,४ विकरान् इति, आपश्रौ २०,१४,५ विकिरान् इति च पाभे. ।
f) नाप. (वृक्ष-भेद-) । पपा. अनु विभागः ? ।
g) विप. (कण्टकमुख-[पक्षिन्-]) । बस. ।
h) विप. (मन्थिपात्र-) । विकारेऽर्थे अण् प्र. ।
i) = १वैकङ्कत- । अण् प्र. इति तनो विशेषः ।
j) वि-कङ्कता ( अपगत-कक्षादिः [शुद्धा] ) इति शोधः (तु. सस्थ. वृक्ष->-क्ष ) । विकङ्कतः इति ?BKA. ।
k) विप. (°हिंसाकृत्-[राक्षसी-, सर्पादिजन्तु-]) । पपा. वि-क° इति ‡विभागः । व्यु. ? । वि [अव्य.] + कटच् प्र. इति पा [५,२,२९]; < वि √कुट् 'कौटिल्ये' इति वा वि √कम् इति वा या [६, ३०] प्रमृ ; वि-कृतु- इत्यस्य विपरिणाम इति च Brug [१, ५०४, ५] WAG [१, १४९ a] MVG [४२ b] SEY [८३] । वृष- (-°हिंसा-) + (√भृ 'करणे' > कर्मणि ) भृतु- > उप. °वृष-भृतु- > °विद्गतु- इति तु मतम् (तु. सस्थ. वङ्क-, विपरु-, व्यङ्ग- [शौ ७,५८,४]) ।
l) सपा. शौ ७,५८,४ व्यंङ्गः इति पाभे. ।
m) = वि-ककर- ।
n) नाप. (°सुत- ) । < वि √कृ 'विकारे [= °फले, विसृष्टौ, सृष्टौ ( वैतु. सा. PW. प्रमृ. वि + कर्ण- [श्रोत्र-] > बस. विप. इतीव ? )] ।
o) नाप. (साम-विशेष-) । < वि √कृ '°शब्दे' ।
p) नाप. (°कोणभग्नेष्टका-) । वि + कर्ण- (°कोण-) > प्रास. > तद्दर्थे °विकर्ण मयी-> यनि. ।
q) धा. विच्छेदने, °करणे वृत्तिः । r) नाप. (अग्नि-) ।
s) सपा. तैआ २, ४,१ आपश्रौ ९, ३,२२ विकुसुकः इति, पै १७,३१,४ विकुमिकः इति च पाभे. ।
t) = सपा. माश ६,४,३,४ । तै ४,१,४,१ बौश्रौ १०, ४ : ४ विलिष्टम् इति पाभे. ।
u) तु. सस्थ. टि. अनु ।
v) = सपा. माश १४,७,२,१८ । क ४०, १,६ ईउ ६ कउ २,१,५;१२ बृउ ४, ४,१५ विजुगुप्सते इति पाभे. ।

व्यं( वि-अ )चिकित्सत् तै ६, ५, ९,१¶.

ϕवि°-चेकितान- -नः ऋ ४,१४,२.

विकिरिड[b]- -०ड[c] काठ १७,१६.

विकिरिद[b]- -०द[c] तै ४,५,१०,५.

विकिरिद्र[b]- -०द्र[c] मा १६, ५२; का १७, ८,६; क २७,६.

?वि कि ली ना व त पै २,५८,२.

?विकिलेद पै ४,२४,६.

वि-कु( म्भ> )म्भा[d]- -म्भाः पै ७, १३, ७.

विकुसिक- -क.[e] पै १७, ३१, ४.

वि√कृ, वि…कृधि[f] ऋ ८,६७,१२.

वि…कृणवन् ऋ ७, ४८,३.

व्यं(वि-अ)कृणोत ऋ ४,३५,३.

वि…कुरुते काठ २३, ६¶; ¶विकरोति तै १,५,९,२[2];२,४, ६,१; ६,१०,३; ६,६,६,२[2]; मै १,१०,९; ३, ७,७; ९,६; ४, ७,४; काठ १३, ५; २६, ७; २८, ८; ३२, ४; ३६, ३; ७; ३७, ३; क ४१, ५; ४४, ८; विकुर्वते शौ १२,१,४३; पै १७, ५,२; विकुर्यात् मै ४,२, १२¶. विचक्रे शौ १२,३, ५४; पै १७, ४१, ४; विचक्रिरे मै ४, १४, ११; शौ १२, १, ५; पै १७, १,४; विचक्र ऋ ४,३६, [(३५, २)४]; विचक्र ऋ ४,३५, [२;४ (३६,४)]; ?विचकर[g] मै १,७,१; व्यं( वि-अ ) कः मै ३, २,८¶; वि…क्षकः ऋ ७, ८,२.

¶विक्रियते तै ५, २, १०, १; काठ २०, ९; क ३१,११.

¶वि-कर्तृ- -र्ता काठ ५,४§; १३, ५; २६, ७; २८, ८; ३२, ४[2]; ३४,२; क ४१, ५; ४४,८.

वि-कृण्वत्- -ण्वन् काठ ४०,१२[h].

वि-कृण्वा( न> )ना- -नाः मै ४, १४,९.

वि-कृत, ता- -तम् ऋ २, ३८,६[i]; -ता शौ १२, ३, २२; पै १७, ३८, ३; -†तानि ऋ १,१६४, १५; शौ ९, १४, १६; पै १६, ६७, ५.

वि√कृत् (छेदने),वि…कृन्तत् ऋ ८, ४५, ३०.

विकृन्तेयुः मै २, २, १२¶.

†विचकर्त>र्ता ऋ १०, ६७, ६;७९,६; मै ४.१४,५; शौ २०, ९१,६; वि…अकृतः[j] ऋ १, ६३,४.

वि-कृत्य ऋ १०, ६८, ८; मै २, ३,१¶; शौ २०,१६,८†.

वि-कृत्यमा( न> )ना- -ना शौ १२,८,१; पै १६,१४४,१.

वि-कृन्त[k]- -न्तानाम्[l] मा १६,२१; का १७,२,५.

वि-कृन्तत्- -न्तन्तम् मा ३०,१८; का ३४,२,५.

वि√कृप्,>कर्पि,¶विकर्पति तै ५, ४,४,३[2]; मै ३,३,६[2]; काठ २१, ७[2]; विकर्पन्ते तै ३,१,३,२¶.

†विकृपन्तु[m] ऋ ४, ५७,८; मा १२, ६९; का १३,५,८.

विकर्पयति काठ २१, ७¶.

वि-कर्ष- -र्षः मै २, ३, १¶

वि-कृष्ट- -ष्टः मै ४,८,१¶.

वि√कृ ( विक्षेप ) > २वि-कर[n]-> विक( र्यं> ) र्या[o]- -र्याभ्यः[p] तै ७, ४, १३, १.

वि√क्लृप् >कल्प्, >कल्पि,विकल्पते शौ ४,७,२?[q];पै २,१,१?[q].

वि…कल्पयामि शौ १२, २, ३२; पै १७, ३३,३; विकल्पयः पै २, २३, १; १९, ४७, ११; व्यं( वि-अ) कल्पयत् ¶मै २,२, ८; ४, ७,६[2]; शौ १०, ६,२१;

---

a) तु. सा. PW. GW. प्रमृ.; वैतु. वें. स्वाअ. इतीव।

b) विप. (अर्थः ? [रुद्र-])। तै. पपा. वि-कि° इति।

c) सपा. °ड <> °द <> °द्र <> मै २,९,९ व्यंकुड इति पाभे.।　　d) विप.। बस.।

e) पाभे. पृ २८३१ *s* द्र.।

f) अत्र धा. *वन्धने वृत्तिः, निषेधार्थे च ग. इति कृत्वा 'अनेहः( सुखपूर्वकं ) नः (अस्मान्) ϕविकृधि (*मोक्षय)' इति वा. (तु. वें.; वैतु. सा. ?, GW. वि प्रसर्तवे इति ?) यत्तु पृ ११२५ कृधि इति पृथङ् निर्दिष्टं तन्नेष्टम्।

g) °कर [उपु१] इति शोधः। सपा. वाश्रौ १, ५,१,९ चकार इति पाभे.।　　h) पाभे. पृ ११५५ *f* द्र.।

i) विप. (अपूर्ण- [अपस्- =कर्मन्-])। अत्र विः नञ्-पर्यायः ( वैतु. वें. सा. =अर्ध- इति ?)।

j) लुङि मपु१। पृ ८ अ-कृत-> -तः इति नेष्टम्।

k) व्यु. प्र-कृन्त- टि. द्र.।

l) पाभे. पृ २११५ *b* द्र.।

m) =सपा. माश ७,२,२,९ आश्रौ २,२०,४। तै ४, २,५,६ प्रमृ. तु वितुदन्तु इति पाभे.। पृ ७४९ *i* टि. अपि द्र., तत्र च पै २,२२,३ भिन्दन् एतु इत्यपि संनिवेश्यम्।

n) नाप. (गर्त-)। गस. उप. अधिकरणे अप् प्र. (पा ३,३,५७)।

o) विप. (२अप्-)। तत्रभवीयः यत् प्र. (पा ४, ४, ११०)।　　p) सपा. काठ ४४, २ स्याल्याभ्यः इति पाभे.।　　q) शोधः पृ २०२१ *r* द्र.।

पै १६, ४४, ४, १९, ४७,१०; ११; व्यु(वि-अ)कल्पयन् मै ३, ६, १¶; शौ ९,४, १५; †व्य-(वि-अ)कल्पयन् ऋ १०,९०, ११[a]; मा ३१,१०[a]; का ३५,१, १०[a]; शौ १९, ६,५[a], पै ९,५, ५[a]; $१६,२५,४[b]; ५.

वि-कल्पक- -कस्य[c] पै १,९०,१.

वि केश[d]- -शः शौ ६,३०,२; पै १९, २४, ६.

विकेशी- -शी खि २, ११, २[e]; शौ ५,१७,४; ११,११,७; १४, २,६०; पै ९, १५,४; १८,१२, ७; -शीः पै १७,१४,६; -शीम् पै १७, २२,१२; -श्यः शौ १, २८,४; ११,२,११[f]; ११,१४.

वि√क्रम्,>क्रमि, क्राम्, विक्रमते मै ३, ७, ९; ८, ३; ¶विक्रमते तै २,५, ६, २; ५, ३, ७, ४; मै २, २, ५; ३, ८, ७; ४, १, १२; ¶विक्रमते काठ १९, ११; क ३१, १; विक्रामते पै १३, १४,८; विक्रमे तै १,६,५,२[g]; शौ १०,५,२५[g]-२८[g]; २९-३५; पै १६, १३१, १[g]-४[g]; ५-१०; विक्रमताम् शौ ९, ५, ८[h], वि-क्रमस्व ऋ ४, १८, [११; ८, १००, १२]; मा ५, ३८; ४१; १२, ५[g]; का २, ६, ८; ५,९, ४; १०,१; १३, १,६[g]; तै १, ३, ४, १; ३, २, ११, ३†; ४, २,१,१[g]; २[g]; मै १, २, १३; १४; ४,१२,५†; काठ ३,१; २; १६, ८[g]; ३७,९; क २,८; ९; शौ ४, ८,४; ७, २७, ३; पै ४, २, ५; ५, ३१,८; १६,१७,२[f]; ६[h]; २०, ६,७; ¶व्य(वि-अ)क्रमत मै १, ६, ११; ३, ७,९; ८, ३; काठ ८, ७;८; १९,११; क ७, ३;४; ३१, १; शौ ९,५, २०; पै १६,९९,६; †व्य(वि-अ)क्रामन् ऋ १०,९०,४; मा ३१, ४; का ३५, १,४; कौ ३,४,४; जै २, ३, ७; शौ १९, ६, २; पै ९,५,२; ¶व्य(वि-अ)क्रामन् तै २, २, ११,५; ३, ३, ७,१; ६, २, २, १; काठ ९, १५.

†विचक्रमे ऋ १,२२,१७; [१८ (८, १२, २७)]; ५,४७,३; ७, १००, ३;४; ८, २९, ७; १०, ११७,८; मा ५, १५; १७,६०; ३४, ४३; का ५, ५ १; १८, ५,११; ३३, २, ६; तै १, २, १३, १; ३, २, ६,१$[i], ४,६, ३,४; मै १, २, ९; ८, ९¶; २, १०, ५; ४, १,१२; १२,१; १४, ५[i]; काठ २, १०; १८,३; क २, ४; २८, ३; कौ १,२२२; २, १०११; १०२०; जै १,२३, ९; ४, ८, १०; ९, १; शौ ७, २७,४;५; १०, ८, ४१$; १३, २, २७[z]; ३, २५; पै १, १७, १$; १६, १०३, ७; १७, १, १०$; १८,३३,४[z]; विचक्रमे ऋ १, २२, १६; ८,१२,[(१,२२, १८) २७]; ५२, ३; खि ३,४, ३; कौ २,१०२४; शौ १,१२,१; १२,१,१०; व्यं(वि-अ) क्रंस्त[k] मा २,२५[jk]; का २,६,३[j]; मै १, ४, २[j]; ७; काठ ५,५[j]; ३२,५; वि···अक्रंसत खि ५, १५, १; शौ २०,१३५,४; वि···अक्रमुः ऋ ८, ९३, १४.

¶विक्रमयति काठ ८,७;८;२१, ३; क ७, ३; ४; ३१, १८.

वि-क्रमण- -†णम् ऋ १०, १५,३; मा १०, १९$[l]; १९,५६; का ११, ६,४$[l]; २१,४,७; तै २, ६, १२, ३; मै ४, १०,१; काठ २१, १४; शौ १८, १, ४५; -णे पै १६, ५४,६; -†णेषु ऋ १, १५४,२; ८, ९,१२; मा ५, २०; का ५, ५,८; मै १, २,९; काठ २, १०; क २, ४; शौ ७, २७, ३; २०, १४१,२; पै २०, ६, १०.

¶वि-क्रम्य तै ६,५,९,१[j]; ७,३,९,१.

---

[a]) सपा. काप ११ अकल्पयन् इति पाभे. ।
[b]) सपा. शौ ९,४,१४ अकल्पयन् इति पाभे. ।
[c]) सपा. शौ ६,१२७,१ विमुलकस्य इति पाभे. ।
[d]) विप. । बस. अन्तोदात्तः (पा ६, २,१७७) ।
[e]) =सपा. आपमं १,४,९ प्रभृ. । मंत्रा १,१,११ रुदती इति पाभे. । [f]) सपा. पै १६,१०५,१ अकेदयः इति पाभे. ।
[g]) सपा. विक्रमे (बौश्रौ ३, २१:२ च)<>विक्रमस्व <>व्यक्रंस्त (माश १,९,३,१०[i]; १२[i] काश्रौ ४,१२, २-५ माश्रौ १,४,३,११[i] वाश्रौ १,१,४,२२[i] च)<> मै २,७,८ अनुविक्रमस्व इति पाभे. ।
[h]) सपा. विक्रमताम् <> विक्रमस्व इति पाभे. ।
[i]) सपा. शौ ९,५,८ विश्रयस्व इति पाभे. ।
[j]) अनुविचक्रमे>सपा. तैब्रा ३,७,७, ११[a] आपश्रौ १०,२२,१२[a] प्रभृ. अुस्वंनु इति, मंत्रा १, २,९-१२ पाग १.८,२ मयगु इति, माग १.११, १८ उग्रयगु इति च पाभे. । [k]) पृ ११०९ अक्रंस्त इति नेष्टम् ।
[l]) सपा. तै १, ८, १५, १ मै २, ६,११ काठ १५,८ क्रमः इति पाभे. ।

वि-क्रान्त, न्ता[1]- -न्तम् मा १०, १९; का ११, ६, ४; तै १, ७, ७, २; ८, १०, २; १५, १; मै १,८,९¶; ¶काठ ८,७;८; ¶क ७,३; ४; -न्ता शौ ८, ११,१; पै १६,१३३,८.

¶वि-क्रान्ति- -न्तिः, -न्तिम् तै २, ५, ६,२; ५, ३, ७,४; काठ २१, ३; क ३१, १८.

†वि-चक्रमाण- -णः ऋ १, १५४, १; मा ५, १८; का ५, ५, ६; तै १, २, १३, ३; मै १, २,९; काठ २, १०; क २, ४; शौ ७, २७,१; पै १६, ९७, ९8; २०, ६,९.

वि √क्री, विक्रीणीते तै ६,१,७,८¶; मै ३,७,७[2]¶; ¶काठ २४, २[2]; ६[2]; ¶क ३७, ३[3]; ७[2]; शौ १२, ४, २; पै १७, १६, २; विक्रीणावहै मा ३, ४९; का ३, ६, १; तै १, ८, ४, १; मै १, १०,२; काठ ९,५; क ८,८. विक्रेष्यते तै ६, १, १०, ३¶; ¶विक्रेष्यामहे काठ २४, १; क ३७, २; ¶व्य(वि-अ)क्रेष्महि काठ २४, १[2]; क ३७, २[1].

वि-क्रय[b]- -यः शौ ३, १५, ४; पै १९, ४९,२.

वि-क्रीय तै ६,१, ७,८¶.

वि √क्लिद्,क्लिन्द् > वि-क्लिन्दु[c]- -न्दुः शौ १२,४,५;पै १७,१६,६.

वि-क्लेदु- > विक्लेदीय(स् >)सी- -सीः शौ ७,८०,१; पै १,२१, १.

वि √क्श्या,क्षा(=√ख्या)>क्शापि, व्य(वि-अ)क्शत् मै १, ६,१‡[d]. वि···अक्शत् मै २, ७, ८‡[e]; ‡वि···अक्शत्[f] मै २,७,८; ३, २, १.

व्यक्षत्[g] पै १३, ७, १७.

विक्शापयेत् मै २, १,६¶.

वि-क्शाय[h] मै २,७,२; ३,१,४.

वि √क्षर्,विक्षरति[i] मै २, ३, ९¶; वि···क्षरिति[j] काठ १२,११¶[i]; विक्षरन्ति शौ १३, ३,२; †वि-क्षरन्ति[k] ऋ १, १६४, ४२; शौ ९, १५, २१; १३, १, ४२; पै १६, ६९, ११; १८, १९, २; †व्य(वि-अ)क्षरत्[l] ऋ ९, ३९, [(२१, ३) ४]; कौ २, २५०; जै ३, २१, १५; व्यं(वि-अ)क्षरन् ऋ ९,२१, [(३९,४)३]. ¶विक्षारयति मै २, ३, ९; काठ १२, ११.

वि-क्षर[m]- -रम् शौ ६, १०५, ३; पै १९, २३,१२.

वि √क्षि[n]>वि-क्षिणत्- >विक्षिणत्-क[o]- -केभ्यः[p] मा १६, ४६; का १७,७,५; क २७,६.

वि-क्षीण- > विक्षीण-क[q]- -केभ्यः[p] तै ४, ५, ९, २; काठ १७, १६.

? विक्षि[r] खि ५, ५, ७.

वि √क्षिप्, विक्षिपेत् मै ४, ९, १७[s].

वि-क्षिप[t]- -पः[u] मा ३९, ७; का ३९,५, १; मै ४, ९,१७?[v].

वि √क्षुभ्, विचुक्षुभे शौ ७,५९,१; पै २०, १४, २.

वि √खन्, विखनामि शौ १२, १, ३५; पै १७, ४, ४; विखन पै १९, ४४, ११-१५. विखनिष्यति मै ३, १,८¶.

वि √खाद् (भक्षणे), वि···खाद[w] पै १,४२,२.

---

a) विप. (विराज्- [शौ.]), अन्यत्र भाप.।

b) गस. उप. भावे अच् प्र.।

c) नाप. (रोग-विशेष-)। गस. उप. कर्तर्यु उन् प्र. (पाउ १,१०)।

d) सपा. ऋ १०,१८९,२ मा ३,७ का ३,१,७ व्यख्यत् इति पाभे.।

e) सपा. ऋ १०,४५,४ मा १२,६ प्रमृ. वि···अख्यत् इति पाभे.।

f) सपा. ऋ ५,८१,२ प्रमृ. वि···अख्यत् इति पाभे.।

g) सपा. शौ २०,३४,१६ व्यख्यत् इति पाभे.।

h) सपा. मा ११,२० का १२,२,९ प्रमृ. माश ६, ३, ३, १२ विख्याय इति पाभे.।

i) परस्परं पाभे.।

j) इडागमः (पा ७,२,३४)।

k) तु. सस्थ. टि. अधि।

l) वि-अ° इति ऋ. पपा. शोधार्हः (तु कौ. पपा.। पा ८,१,७१)।

m) भावे अप् प्र.।

n) धा. क्षये हिंसायाञ्च वृत्तिः।

o) विप. (रुद्र-)।

p) पामे. पृ ६१८ q द्र.।

q) विप.>नाप. (रुद्र-)।

r) सपा. शांश्री ८,२१,१ आवृक्षि इति पाभे.।

s) सपा. माश्री ३,६,२ विक्षिपे (सं१) इति पाभे. (तु. तत्रत्यं संस्कर्तुः टि.)।

t) नाप. (मरुत्-)। गस. उप. कर्तरि कन् प्र. उसं. (पा ३,१,१३५)।

u) सपा. तैआ ४,२५,१ विक्षिपः इति पाभे.।

v) विक्षि° इति स्वरः? यनि. शोधः।

w) सपा. मा ११,७८ प्रमृ. खाद इति पाभे.।

वि-खादु[a]- -दे ऋ १०,३८,४.

विखानस[b]-> वैखानस[c]- -सम् तै ७, १,४,३¶.

वि√खिद्, विखिदन्ति पै १६,७३, ५.

वि-खिदु[d]- -दाय[e] काठ १७, १५; क २७, ५.

वि√ख्या, †व्यं (वि-अ)ख्यत् ऋ १, ३५, ८; ४६, १०; १२३, २; ९, १०१, ७; १०, १२७, १; १८९,२[f]; मा ३, ७[f]; ३४, २४; का ३, १, ७[f]; ३३, १, १८; तै १,५,३, १[f]; काठ ७, १३[f]; ९, १९; १३, १६; क ६, ४[f]; कौ १, ५४६; २, १६८; ७२७[f]; ३, ५,५[f]; जै १, ५६, ३; २, ६,४[f]; ३, १६, ६;५९, ११[f]; शौ ६, ३१, २[f]; १३, २, ९$, २०, ३४,१६$[g];४८,५[f]; पै १८, २१, ३; १९,४५,१२[f]; †वि…अख्यत्[h] ऋ १०,४५,४; मा १२, ६; २१; ३३; का १३, १, ७; २-३, ४; तै १, ३,१४, २; ४, २, १-२, २; काठ १६, ८-१०; †वि…अख्यत् ऋ १, ३५, ७, ११३, ४; ४, १९,९[i]; ५, ८१, २[j]; मा १२, ३[j]; का १३, १,३[j]; तै ४, १, १०, ४[j]; काठ १६, ८[j]; शौ ७, ७७, ६[j]; पै २०, ११, १०[j]; ख्यं (वि-अ)ख्यन् ऋ ४,१,१८; वि…अख्यन् ऋ १,३५,५; वि…ख्यन् ऋ ३, ३१, १२; †ख्यु (वि-अ)ख्यः ऋ ७,१३, ३[k]; तै १, ५, ११,२; ख्यं(वि-अ)ख्यत ऋ १. १६१, १३; ख्यु (वि-अ)ख्यम् ऋ ८, ५५, १[l]; खि ३, ७,१; वि…अख्यम् ऋ १, १०९, १. विख्येषम्[m] तै १, १,४, २; ३, ४, ३.

वि-ख्यात- -तम् खिसा २६,२१.

वि-ख्याय[n] मा ११, २०; का १२, २, ९; तै ४, १, २, ३; काठ १६, २.

†वि-ख्ये[o] ऋ १०,१५८,४; मै ४, १२, ४; काठ ९, १९.

वि√गच्छ्, गम्, विगच्छति शौ ११, १०, ३३.

वि-गत- -ते शौ ५,२१,१०.

वि√गद्, विगद शौ ५, २२, ६; पै १३, १, ८.

वि-गादु[p]- -देषु ऋ १०,११६, ५

वि√गन्ध् वि जुगंहे टि. द्र.

वि-गामन्[q]- -मभिः ऋ १,१५५,४.

वि√गाह्, विगाहते ऋ ९,३,६;६७, १४; ८६,८; ४०; ९९ [(७,२) ७]; मै४,१२,५[r]; कौ२,६०७†; जै ३, ४९,९†; विगाहेयाम् शौ १२, ३, ३६; पै १७, ३९, ६; व्यु (वि-अ) गाहथाः खि ५, १४, ३; शौ २०, १२८, १४; विगाहथाः खि ५, १४, १; शौ २०, १२८, १२[s].

वि-गाहु[t]- -हम् ऋ ३, ३, ५; काठ ७, १२†.

वि√गुप् (निन्दायाम्) > जुगुप्स[u], विजुगुप्सते[v] का ४०, १,६.

वि√गृभ्, गृह्, ग्रह्, विगृह्णाति ¶तै ६, ४, ५, ७; ५, १०, १; ¶विगृह्णाति तै २, ५, ७, २; मै ४, ५,५[t]; ¶विगृह्णाति काठ २६, १०; २७, ३; १०[t]; २८, ७; १०; क ४१, ८; ४२, ३; ४४,७,४५,१; विगृह्णते पै १६, ७३, ५; वि…गृह्णते तै ६, ३, २, ३¶; विगृह्णन्ति काठ २७, १०[t]; ३७, १२[t]; विगृह्णीध्वम् तै ६, ४, ७, २¶.

---

[a]) नाप. [संग्राम- (तु. निघ २, १७ वें. PW. प्रभृ. [वैतु. सा. विप. इति ?])]। अधिकरणे घञ् प्र.।
[b]) व्यप. (ऋषि-)। व्यु. ?। [c]) नाप. (साम-विशेष-)। तेनदृष्टीयः अण् प्र.। [d]) विप. (रुद्र-)।
[e]) पाभे पृ २११६ l द्र.। [f]) पाभे पृ २८३४ d द्र.।
[g]) पाभे. पृ २८३४ g द्र.। [h]) पाभे पृ २८३४ e द्र.।
[i]) धा. दर्शने वृति. (तु. प्र…अख्यत् ऋ ८,७९,२)।
[j]) पाभे. पृ २८३४ f द्र.।
[k]) वि अ° इति ऋ.पपा.? यनि. शोधः (तु. तै. पपा.)।
[l]) वि-अ° इति पपा.? यनि. शोधः।
[m]) तु. पृ ३२९ s टि.। सपा. मा १,११ का १,३,७ अभि-विख्येषम् इति, मै १, १, ५ अभिव्यंक्षम् (सात. अभि-व्यंक्षम्) इति, काठ १, ४ क १, ४ अभिव्यख्यम् इति च पाभे. द्र.। [n]) पाभे. पृ २८३४ h द्र.।
[o]) तुमर्थीयः कैः प्र. उसं. (पा ३,४,११)।
[p]) नाप. (संग्राम- [तु.सा. GW. प्रभृ.])। <वि√गद् '*विघाते' (तु. गद- [रोग-], गदा- [वैतु. वें. बस. इति कृत्वा = गदरहिताऽङ्ग- इति ?])। [q]) नाप. (विक्रमण-, पद-)। प्राम. पूप. स्वरः। उप. <√गा 'गतौ' (तु. Brug [२,१,१६५])। [r]) = सपा. आपश्रौ १६, ११,१२ वैश्रौ १८,१०·५ हिश्रौ ११,४,१२। माशृ १,४,१६ अवगाहते इति पाभे.। [s]) शंपा. सात. विगाहथाः इति ?।
[t]) विप. (अग्नि-)। गस. उप. अच् प्र.।
[u]) पा ३,१,६। [v]) पाभे. पृ २८३१ v द्र.।

